नेउं जिणिंदभवणे पुत्थयरयणं च अविय पुरओ ।
विसो इमो य नियमो समणीए सुद्धभावाए ॥"

—पंचमीमाहात्म्ये [वि सं १००९ वर्षे वि पे ता ग १४–१५;२०–२२]

१४ दुर्लभराजराजसभायां चैत्यवासिनिर्जेता वसतिवासस्थापकः [वि सं १०८० वर्षे विद्यमान ] जिनेश्वरसूरि —

"जत्थेवि पवत्तीए निवभण होइ मिसिसमारंभो ।
सो सुत्ताओ नमइ त चिय सिद्धेमि ता परमं ॥
जिणवयणामयसुरसंगमेण ठक्कदुक्खसुसम्मत्त ।
कुग्गुहनियत्तमाया भमति जिणधम्ममेगे ठ ॥
जिणवयण सारंती साहू च ते वि साहणसमत्था ।
वायरण–छंद–नाडय–कव्वाउकारनिम्मम्मा ॥
छद्दरिसण–सक्कविमा कुलिलिधिसिद्धंतजाणया धणियं ।
ता ताण कारणे समयेव इह होइ लेहणीयं ॥
कारूण पुत्थयाइं समप्पिय सासणं कुलिम्पीहिं ।
अपरिसपीयमेयं कहामि तओ य जिणधम्मे ॥

—सम्यक्त्व–पञ्चलिङ्गी–प्रकरणे [वि ४, गा. ६१–६५]

विने०—"वयं दूरदेशादागताः पूर्वपुरुषविरचितसमसिद्धान्तपुस्तकानि न कानिचि-द्दानीयानि । आनयत पूर्वपुरुषविरचितसिद्धान्तपुस्तकगण्डसकम् । × × पुस्तकगण्ड सकमानीयमात्रमेव छोटित दृशवैकालिक निर्गतम् ॥"—गणधरसार्धशतकबृहद्वृत्ती [प १०]

१५ वि सं ११२५ वर्षे जिनचन्द्रसूरि—

"ज सत्थ जिणवयणपरसुत्तकारणं महत्थ च ।
बोधिजनत दिह सुय च त जइ लिहावेव ॥
सयमसमत्थो अओ य नत्थि जइ तल्लिहावगो कोइ ।
ता साहारणदव्वेणं सं लिहावेज्जा सुद्धिकए ॥
सिहरं चउसरं मउस्सरं च विहिणा लिहाविऊण च ।
सत्थोत्थयाइं सुविपहुसंघट्टाणेसु ठावेज्जा ॥
बे गहण–धारणाए पडुया ओयस्सिणो जे कुलस्स ।
परमाइगुणसमेया ताण समप्पेज्ज सिद्धिवज्ञ ॥
आहार–वसहि–वत्थाइएहिं कालुगुणाभ ताण ।
सासयसकनिमित्तं कुज्जा सहायणाविहिं च ॥

अच्चरिसणीयमभेसिं सासण कयमिण कुणसेणं ।
थिरया नयवम्माण चरणगुणाण विसुद्धी य ॥
भवोच्छित्ती जिणसासणस्स भव्वाणुकंपण अभय ।
सयाण य ता पत्थं पयाहिणं अहासत्ति ॥"

—संविग्नजनाज्ञायाम् [ पुस्तकद्वारे गा. १२–१८ ]

११ 'सहस्रन्यसनासदसकपुस्तिका सूराचार्यप्रमुखचतुरशीतिसद्धचैत्यवासाचार्याः' इति गणधरसार्धशतकबृहद्वृत्तौ [ पृ. ५ ] सूचितो विक्रमीयैकादशशताब्द्यां दुर्लभराज-राजसभायां वादे चैत्यवासिपक्षप्रमुखोऽयम् प्रभावकचरित(पृष्ठ १८)प्रबन्धवर्णितो द्विसन्धानमहाकाव्यकर्ता गूर्जरेश्वरभीमदेवमातुलसुत सम्मानितो मालवेशभोजदेवसमादृतो द्रोणाचार्यभ्रातृजसत्पदधरश्च सूराचार्य —

"तर्क–व्याकरणाद्या विद्या न भवन्ति धर्मशास्त्राणि ।
निगदन्त्यविदितजिनमतस्थिति जडमतयो जना केऽपि ॥
मिथ्यादृष्टिश्रुतमपि सद्दृष्टिपरिग्रहात् समीचीनम् ।
किं काञ्चनं न कनकं रसानुविद्धं भवति ताम्रम् ? ॥
व्याकरणालङ्कार–च्छन्दः –प्रमुखं जिनोदितं मुख्यम् ।
सुगतादिमतमपि स्यात् स्याद्वादक्षमतमलङ्कृतम् ॥
मुनिमतमपि विज्ञात न पातक ननु विरक्तचित्तानाम् ।
यत् सर्वं ज्ञातव्यं कर्तव्यं न त्वकर्तव्यम् ॥
विज्ञाय किमपि हेयं किञ्चिदुपादेयमपरमपि हेयम् ।
तदिति लिखितं खलु लेख्यं ज्ञेयं सर्वमतविधौ ॥
ये लेखयन्ति सकलं सुधियोऽनुयोगं शब्दानुशासनमशेषमलङ्कृतीश्च ।
छन्दांसि शास्त्रमपरं च परोपकारसम्पादनैकनिपुणाः पुरुषोत्तमास्ते ॥
किं किं तैर्न कृतं न किं विवपितं दानं प्रदत्तं न किम् ?
का वाऽऽपन्न निवारिता तनुमतां मोहार्णवे मज्जताम् ? ।
नो पुण्यं किमुपार्जितं किमु यशस्तारं न विस्तारितं
सत्कल्याणकलापकारणमिदं यैः शासनं लेखितम् ॥

—दानादिप्रकरणे [ पञ्चमावसरे श्लो. ८५, ८८, ९१–९५ ]

१७. "इह किल कलिकाले चण्डपाखण्डिकीर्णे व्यपगतजिनचन्द्रे केवलज्ञानहीने ।
कथमिव तनुभाजां सम्भवेद् वस्तुतत्त्वावगम इह यदि स्यान्नागमः श्रीजिनानाम् ॥
जिनमतविषयाणां पुस्तकानां समितैरक्षिपक्षविरचितानां लेखनं कारयेद् यः ।
प्रथयति महिमानं सत्त्वपूजादिरम्यं सुगुरु–समयभक्तिर्मानवो मानवीयः ॥"

धनव्ययः समुपदिष्टः । यत्र जिनशासनपुस्तकानामपि दर्शितं तृतीयं स्थानम् । गूर्जरेश्वर-सिद्धराजाभ्यर्थनया शब्द–वृत्ति–सुगम–सिद्धहेमशब्दानुशासनविधाता सुप्रसिद्धहेम-चन्द्राचार्यः परमार्हतकुमारपालभूपालशुश्रूषिते स्वोपज्ञविवरणविभूषिते योगशास्त्रे (प्र.३)
“एवं व्रतस्थितो भक्त्या सप्तक्षेत्र्यां धनं वपन् । दयया चातिदीनेषु महाश्रावक उच्यते ॥”

इत्यस्मिन् ११९ पद्ये सूचितायां जैनबिम्ब–भवनागम–साधु–साध्वी–श्रावक–श्राविकालक्षणायां सप्तक्षेत्र्यां जिनागमक्षेत्रमपि धनवपनार्हमिति सविस्तरं प्राबोधयत्–“जिनागमक्षेत्रे च धनवपनं यथा–जिनागमो हि कुशास्त्रजनितसंस्कारविषसमुच्छेदनमहामन्त्रायमाणो धर्माधर्म–कृत्याकृत्य–भक्ष्याभक्ष्य–पेयापेय–गम्यागम्य–सारासारादिविवेचनहेतुः सन्तमसे दीप इव, समुद्रे द्वीप इव, मरौ कल्पतरुरिव संसारे दुरापः ।

जिनादयोऽप्येतत्प्रामाण्यादेव निर्णीयन्ते । × × जिनागमबहुमानिना च देव–गुरु–धर्मादयोऽपि बहुमता भवन्ति । किञ्च केवलज्ञानादपि जिनागम एव प्रामाण्येनातिरिच्यते । × × एकमपि जिनागमवचनं भविनां भवविनाशहेतुः । × ×

जिनवचनं तु दुःषमाकालवशादुच्छिन्नप्रायमिति मत्वा भगवद्भिर्नागार्जुन–स्क(स्कं)न्दिलाचार्यप्रभृतिभिः पुस्तकेषु न्यस्तम् । ततो जिनवचनबहुमानिना पुस्तकेषु लेखनीयम् । वस्त्रादिभिरभ्यर्चनीयं च । यदाह—

“न ते नरा दुर्गतिमाप्नुवन्ति न मूकतां नैव जडस्वभावम् ।
न चान्धतां बुद्धिविहीनतां च ये लेखयन्तीह जिनस्य वाक्यम् ॥
लेखयन्ति नरा धन्या ये जिनागमपुस्तकम् ।
ते सर्वं वाङ्मयं ज्ञात्वा सिद्धिं यान्ति न संशयः ॥”

जिनागमपाठकानां वस्त्रादिभिरभ्यर्चनं भक्तिपूर्वं सम्माननं च । यदाह ‘पठति॰’ लिखितानां च पुस्तकानां संविग्नगीतार्थेभ्यो बहुमानपूर्वकं व्याख्यापनम्, व्याख्यापनार्थं दानम्, व्याख्यायमानानां च प्रतिदिनं पूजापूर्वकं श्रवणं चेति ॥”

इत एव प्रकाशिते प्राचीनगूर्जरकाव्यसङ्ग्रहे वि. सं. १३२७ वर्षीये सप्तक्षेत्रीरासेऽपि तद्विवेचनम् । तथा राजगच्छीयधर्मघोषसूरिप्रशिष्येण च पद्मप्रभ–देवप्रभसूरिशिष्येण प्रद्युम्नसूरिणा सङ्कलिते प्रा. विचारसारप्रकरणे [ आराधनाभिधे ] धर्मरत्नप्रकरणवृत्ति–दानप्रदीपादौ च तस्यां सप्तक्षेत्र्यां जिनागम-पुस्तकलेखनार्थं धनव्यय उपादिष्टः ।

२२ समालोकनीयमत्र भूपाल–महामात्यादिनामसूचिपत्रेषु ।

२३ विचारसमुच्चयादि–प्रशस्ति–गुर्वावली–सोमसौभाग्यकाव्य–तपागच्छपट्टावली-प्रमुखं पर्यवलोकनीयम् ।